- अयम् अभिनवगुप्ताचार्यस्य शिष्यः, कविः, आलङ्कारिकश्च ।
- कश्मीरराज्ञः अनन्तस्य सभापण्डितः ।
- कविकण्ठाभरणम्, औचित्यविचारचर्चा चेति काव्यशास्त्रे ग्रन्थद्वयं व्यरचयत् ।
- काव्यशास्त्रवर्त्मनि 'औचित्यविचारः' इत्यमुं काव्यसिद्धान्तं प्रतिष्ठापयामास ।

यथा -

Contd….

"औचित्यस्य चमत्कारकारिणश्चारुचर्वणे ।
रसजीवितभूतस्य विचारं कुरुतेऽधुना ।।"

- कारिका, वृत्तिः, उदाहरणम् इत्येतेषु अंशेषु विभक्तः, यत्र कारिकाः, वृत्तीः क्षेमेन्द्रः एव लिलेख, उदाहरणानि तु इतरकाव्येभ्यः गृहीतानि ।
- ग्रन्थेऽस्मिन् शब्द-अर्थ-गुण-रस-अलङ्काराणाञ्च औचित्यं सोदाहरणम् उररीचकार ।

- काव्यप्रकाशस्य कर्ता आचार्यः मम्मटः शैवागमानुयायी, निखिलशास्त्रनिष्णातः ।
- अयं कश्मीर-प्रदेशीयः ।
- काव्यशास्त्रस्य अयं प्रकाशः इति संसूचयन् अस्य ग्रन्थस्य नाम 'काव्यप्रकाशः' इति अकारि ।
- ग्रन्थेऽस्मिन् दश उल्लासाः, 140 कारिकाश्च सन्ति ।

Contd....

- कारिका, वृत्तिः, उदाहरणम् इत्येषु अंशेषु अयं विभक्तः ।
- ग्रन्थेऽस्मिन् काव्यप्रयोजनम्, भेदाः, हेतुः, स्वरूपं, शब्दार्थस्वरूपनिर्णयः, शाब्दी आर्थी च व्यञ्जने, रसध्वनिः, व्यञ्जनाशक्तिः, चित्रकाव्यनिरूपणं, गुणदोषनिरूपणं, शब्द-अर्थालङ्काराणां भेदाश्च इत्यादयः नैके विषयाः प्रतिपादिताः ।

Contd….

- व्याकरणशास्त्रे यथा ‘महाभाष्यम्’ तथा काव्याशास्त्रे एषः महत् प्रामाण्यं वहति इति विदुषाम् अभिप्रायः ।

- प्रायशः अस्य ग्रन्थस्य 60 व्याख्यानानि उपलभ्यन्ते इत्यस्मात् अस्य प्रशस्तिम् ऊहितुं शक्यते ।

- ‘शब्दव्यापारविचारः' इति काव्यशास्त्रमधिकृत्य अन्योऽयं ग्रन्थः व्यरचि ।

- रुचकः इत्यपि अस्य नामान्तरमस्ति ।
- अलङ्कारान् अधिकृत्य उपलब्धमानः प्रामाणिकः ग्रन्थः अयम् ।
- सूत्रं, वृत्तिः, उदाहरणम् इत्येषु अंशेषु अयं विभक्तः ।
-

Contd…….

- अस्मिन् ग्रन्थे **75** अलङ्कारान् सोदाहरणं प्रत्यपादयत् ।
- अलङ्काराणां शास्त्रीयविश्लेषणं विवेचनञ्च अकारि ।
- जयरथः अस्य ग्रन्थस्य टीकां रचितवान् ।

- विद्यानाथः 'ओरुगल्लु' इति तेलङ्गानाप्रदेशस्य राज्ञः प्रतापरुद्रस्य सभापण्डितः।
- अलङ्कारशास्त्रलक्षणानि प्रतिपादयन् उदाहरणेषु तस्य आस्थानराज्ञः प्रतापरुद्रस्य वर्णनं कुर्वन् रचितवान् अयं ग्रन्थः ।
- अस्मिन् ग्रन्थे नव प्रकरणानि सन्ति ।
- 

**Contd…...**

- श्रव्य-दृश्यकाव्यभेदान्, काव्यस्वरूपं, हेतून्, प्रयोजनानि, चित्रकाव्यं, दोष-गुण-अलङ्कार-रीतीन्, नायिका-नायकयोः भेदान्, रसं, ध्वनिं, तस्य भेदान् इत्यादीन् नैकान् काव्यशास्त्रविषयान् अयं ग्रन्थकारः अस्मिन् पस्पर्श ।

- अयं ओरिस्सा (उत्कल) प्रदेशीयः ।
- ग्रन्थस्य अस्य अलङ्कारशास्त्रविषयाणां संव्यूहः प्रशंसनीयः ।
- ‘वाक्यं रसात्मकं काव्यम्’ इति नूतनतया काव्यलक्षणं व्यानञ्ज ।
- सरलभाषायां समेषां काव्यशास्त्रस्य अंशानां लक्षणं प्रत्यपादि अनेन ।

Contd….

- अतः संस्कृतसाहित्यशास्त्रे प्रवेशार्हानां अयं ग्रन्थः अत्यन्तो उपकारी भवति ।
- अयं ग्रन्थः दशसु परिच्छेदेषु विभक्तः ।
- ग्रन्थेऽस्मिन् कस्यचिद्वा निरसनम् अकृत्वा काव्यशास्त्रस्य लक्षणानि एव अकारि ।

**Contd….**

- अयं स्वयं कविः इति कारणेन बहूनि उदाहरणानि स्वेभ्यः काव्येभ्यः उदाहृतानि ।
- बहुत्र अनेन काव्यप्रकाश-ध्वन्यालोक-अलङ्कारसर्वस्वादीनां ग्रन्थानाम् अनुकरणम् अपि अकारि ।
- सतीषु बह्वीषु टीकासु अस्य ग्रन्थस्य वागीशस्य टीका अत्यन्ता प्रसिद्धा जाता ।

- अयम् आन्ध्रदेशीयः ।
- अयं शताधिकग्रन्थनिर्माता, महान् पण्डितश्च ।
- अलङ्कारशास्त्रसम्बद्धग्रन्थाः वृत्तिवार्तिका, चित्रमीमांसा, कुवलयानन्दश्चेति रचितवान् ।
- शब्द-चित्रालङ्कारान् अधिकृत्य लिखितः ग्रन्थः कुवलयानन्दः ।

Contd….

- अस्मिन् **118** अलङ्काराणां सोदाहरणं वर्णनम् अकारि ।
- ग्रन्थस्यास्य **10** टीकाः उपलभ्यन्ते ।
- बह्वीषु विदेशीयभाषासु अयम् अनुवादितश्च ।
- अलङ्काराणां विवेचनविषये अस्य वैशिष्ट्यं नितरां वर्तते ।

- अयम् आन्ध्रदेशीयः ।
- काव्यशास्त्रग्रन्थेषु अयम् अर्वाचीनः ग्रन्थः, तथापि अस्य भाषा प्रौढा ।
- सूत्रबद्धोऽयं ग्रन्थः ।
- जगन्नाथेन एव स्वयम् अस्य व्याख्यानं व्यरचि ।

Contd…..

- ध्वन्यालोक-काव्यप्रकाशग्रन्थयोरनन्तरं महती प्रशस्तिः लब्धा अस्य रसगङ्गाधरस्य ग्रन्थस्य ।
- आननद्वये विभक्तः अयं ग्रन्थः ।
- ‘रमणीयार्थप्रतिपादकः शब्दः काव्यम्’ इति काव्यस्य विनूत्नलक्षणं प्रत्यपादि अनेन ।

Contd…..

- काव्यस्य उत्तम-मध्यम-अधम-भेदान् अतिरिच्य उत्तमोत्तमभेदः इति नूतनभेदम् आविष्चकार ।
- अस्य रससमीक्षा अपि उत्कृष्टा ।
- 'तिरस्कारः' इति नूतन-अलङ्कारस्य परिचयञ्च अकारि ।

